# सङ्कटमोचन हनुमानाष्टकम्

ततः स तुलसीदासः सस्मार रघुनन्दनम् ।

हनूमन्तं तत्पुरस्तात् तुष्टाव भक्तरक्षणम् ॥ १॥

धनुर्बाण धरोवीरः सीता लक्ष्मण सयुतः ।

रामचन्द्रस्सहायो मां किं करिष्यत्युयं मम ॥ २॥

ॐ हनुमानञ्जनी सूनो वायुपुत्रो महाबलः ।

महालाङ्गूल निक्षेपैर्निहताखिल राक्षसाः ॥ ३॥

श्रीराम हृदयानन्द विपत्तौशरणं तव ।

लक्ष्मणे निहिते भूमौ नीत्वा द्रोणाचलं युतम् ॥ ४॥

यया जीवित वा नाद्य ता शक्तिं प्रकटीं कुरु ।

येन लङ्केश्वरो वीरो निःशङ्कः विजितस्त्वया ॥ ५॥

दुर्निरीक्ष्योऽपिदेवानी तद्बलं दर्शयाधुना ॥ ६॥

यया लङ्कां प्रविश्य त्वं ज्ञातवान् जानकी स्वयं ।

रावणांतः पुरेऽत्युग्रेतां बुद्धिं प्रकटी कुरु ॥ ७॥

रुद्रावतार भक्तार्ति विमोचन महाभुज ।

कपिराज प्रसन्नस्त्वं शरणं तव रक्ष माम् ॥ ८॥

इत्यष्टकं हनुमतः यः पठेत् श्रद्धयान्वितः ।

सर्वकष्ट विनिर्मुक्तो लभते वाञ्छितफलम् ॥

ग्रहभूतार्दितेघोरे रणे राजभयेऽथवा ।

त्रिवारं पठेनाच्छ्रीघ्रं नरो मुच्येत् सङ्कटात् ॥

॥ इति श्रीगोस्वामितुलसीदास विरचितं श्रीहनुमान्नाष्टकं सम्पूर्णम् ॥